शर्म्मिष्ठायां त्रयः पुत्राः द्रुह्युः अनुः पुरुश्च। तत्र यदुप्रभृतयश्चत्वारः पितुराज्ञाहेलनं कृतवन्तः पित्रा शप्ताः। ज्येष्ठपुत्रं यदुं शशाप तव वंशे राजा चक्रवर्त्ती मा भूदिति। तुर्व्वसुद्रुह्यूनून् शशाप युष्माकं वंश्या वेदवाह्या म्लेच्छा भविष्यन्ति। इति श्रीभागवतमतम् ॥ * ॥
("असृजत् पह्लवान् पुच्छात् प्रस्रावाद्द्राविडान् शकान्।
योनिदेशाच्च यवनान् शकृतः शवरान् बहून् ॥
मूत्रतश्चासृजन् काञ्चीञ्छरभांश्चैव पार्श्वतः
पौण्ड्रान् किरातान् यवनान् सिंहलान् वर्व्वरान् खशान् ॥
चिबुकांश्च पुलिन्दांश्च चीनान् हूणान् सकेरलान्।
ससर्ज फेनतः सा गौर्म्लेच्छान् बहुविधानपि॥"
सा वशिष्ठस्य धेनुः। इति महाभारते ।१।१७६। ३५—३७ ॥) अन्यच्च। "शकजवनकाम्बोजपारदपह्लवा हन्यमानास्तत्कुलगुरुं वशिष्ठं शरणं ययुः। अथैतान् वशिष्ठो जीवन्मृतकान् कृत्वा सगरमाह। वत्स वत्सालमेभिर्जीवन्मृतकैरनुसृतैः। एते च मयैव त्वत्प्रतिज्ञापालनाय निजधर्म्मद्विजसङ्गपरित्यागं कारिताः। स तथेति तद्गुरुवचनमभिनन्द्य तेषां वेशान्यत्वमकारयत्। जवनान्मुण्डितशिरसोऽर्द्धमुण्डान् शकान् प्रलम्बकेशान् पारदान् पह्लवांश्च श्मश्रुधरान्निःस्वाध्यायवषट्कारानेतानन्यांश्च क्षत्त्रियांश्चकार। ते चात्मधर्म्मपरित्यागाद्ब्राह्मणैश्च परित्यक्ता म्लेच्छतां ययुः।" इति विष्णुपुराणे ।४।३।१८—२१ ॥ * ॥ प्रकारान्तरेण तस्योत्पत्तिर्यथा,—

सूत उवाच।
"वंशे स्वायम्भुवस्यासीदङ्गो नाम प्रजापतिः।
मृत्योस्तु दुहिता तेन परिणीतातिदुर्मुखी ॥
सुतीर्था नाम तस्यास्तु वेनो नाम सुतः पुरा।
अधर्म्मनिरतः कामी बलवान् वसुधाधिपः।
लोकेऽप्यधर्म्मकृज्जातः परभार्य्यापहारकः ॥
धर्म्माचारप्रसिद्ध्यर्थं जगतोऽस्य महर्षिभिः।
अनुनीतोऽपि न ददावनुज्ञां स यदा ततः ॥
शापेन मारयित्वैनमराजकभयार्द्दिताः।
ममन्थुर्ब्राह्मणास्तस्य बलाद्देहमकल्मषाः ॥
तत्कायान्मथ्यमानात्तु निपेतुर्म्लेच्छजातयः।
शरीरे मातुरंशेन कृष्णाञ्जनसमप्रभाः ॥"
इति मत्स्यपुराणे। १०। ३—८ ॥ * ॥
म्लेच्छभाषाभ्यासनिषेधो यथा,—
"न घातयेदिष्टकाभिः फलानि वै फलेन तु।
न म्लेच्छभाषां शिक्षेत नाकर्षेच्च पदासनम् ॥"
इति कौर्म्मे उपविभागे १५ अध्यायः ॥*॥

तस्य मध्यमा तामसी गतिर्यथा, मानवे। १२। ४३।
"हस्तिनश्च तुरङ्गाश्च शूद्रा म्लेच्छाश्च गर्हिताः।
सिंहा व्याघ्रा वराहाश्च मध्यमा तामसी गतिः ॥"
(मन्त्रणाकाले म्लेच्छापसारणमुक्तं यथा, मनुसंहितायाम्। ७। १४९।
"जडमूकान्धवधिरांस्तैर्य्यग्योनान् वयोऽतिगान्।
स्त्रीम्लेच्छव्याधितव्यङ्गान् मन्त्रकालेऽपसारयेत् ॥"
"अथवा एवंविधा मन्त्रिणो न कर्त्तव्याः। बुद्धिविभ्रमसम्भवात्।" इति तद्भाष्ये मेधातिथिः ॥
म्लेच्छानां पशुधर्म्मित्वम्। यथा, महाभारते ।१। ८४। १५।
"गुरुदारप्रसक्तेषु तिर्य्यग्योनिगतेषु च।
पशुधर्म्मिषु पापेषु म्लेच्छेषु त्वं भविष्यसि ॥")
म्लेच्छकन्दः, पु, (म्लेच्छप्रियः कन्द इति मध्यपदलोपी कर्म्मधारयः।) लशुनम्। इति राजनिर्घण्टः ॥ (तस्य पर्य्यायो यथा,—
"लशुनस्तु रसोनः स्यादुग्रगन्धो महौषधम्।
अरिष्टो म्लेच्छकन्दश्च यवनेष्टो रसोनकः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
म्लेच्छजातिः, स्त्री, (म्लेच्छस्य जातिरिति षष्ठीतत्पुरुषः म्लेच्छरूपा जातिरिति कर्म्मधारयो वा।) गोमांसखादकबहुविरुद्धभाषकसर्व्वाचारविहीनवर्णः। यथा,—
"गोमांसखादको यस्तु विरुद्धं बहु भाषते।
सर्व्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते ॥"
इति प्रायश्चित्ततत्त्वधृतबौधायनवचनम् ॥
अपि च।
"भेदाः किरातशवरपुलिन्दा म्लेच्छजातयः ॥"
इत्यमरः। २। १०। २० ॥
अन्यच्च।
"पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाः शकाः।
पारदाः पह्लवाश्चीनाः किराताः दरदाः खशाः ॥
मुखबाहूरुपज्जानां या लोके जातयो बहिः।
म्लेच्छवाचश्चार्य्यवाचः सर्व्वे ते दस्यवः स्मृताः॥"
इति मानवे १० अध्यायः ॥
म्लेच्छदेशः, पु, (म्लेच्छानां देशः म्लेच्छप्रधानो देशो वा।) चातुर्व्वर्ण्यव्यवस्थादिरहितस्थानम्। तत्पर्य्यायः। प्रत्यन्तः २। इत्यमरः। २। १। ७ ॥ भारतवर्षस्यान्तं प्रतिगः प्रत्यन्तः। म्लेच्छति शिष्टाचारहीनो भवत्यच्च म्लेच्छः अच्। स चासौ देशश्चेति म्लेच्छदेशः। किंवा म्लेच्छयन्ति असंस्कृतं वदन्ति शिष्टाचारहीना भवन्तीति वा पचाद्यचि म्लेच्छा नीचजातयः तेषां देशो म्लेच्छदेशः। भारतवर्षस्यान्तः शिष्टाचाररहितः कामरूपवङ्गादिः। उक्तञ्च।
"चातुर्व्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते।
म्लेच्छदेशः स विज्ञेय आर्य्यावर्त्तस्ततः परमिति ॥"
इति भरतः ॥
(अपि च, मनुः। २। २३।
"कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततःपरम् ॥")
म्लेच्छभोजनं, क्ली, (भुज्यते यदिति। भुज् + कर्म्मणि ल्युट्। ततो म्लेच्छानां भोजनम्।) यावकः। इति शब्दरत्नावली ॥
म्लेच्छभोजनः, पु, (भुज्यतेऽसौ इति। भुज् + ल्युट्। म्लेच्छानां भोजनः।) गोधूमः। इति त्रिकाण्डशेषः ॥
म्लेच्छमण्डलं, क्ली, (म्लेच्छानां मण्डलं समूहोऽत्र।) म्लेच्छदेशः। इति हेमचन्द्रः ॥
म्लेच्छमुखं, क्ली, (म्लेच्छे म्लेच्छदेशे मुखमुत्पत्तिरस्य। इत्यमरटीकायां रघुनाथः।) ताम्रम्। इत्यमरः। २। ९। ९७ ॥ (तथास्य पर्य्यायः।
"ताम्रमौदुम्बरं शुल्वमुदुम्बरमपि स्मृतम्।
रविप्रियं म्लेच्छमुख सूर्य्यपर्य्यायनामकम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
"ताम्रमौदुम्बरं सूक्ष्मं विद्यात् म्लेच्छमुखन्तथा ॥"
इति गारुड़े २०८ अध्याये ॥)
म्लेच्छाशः, पु, (म्लेच्छैरश्यते इति। अश् + कर्म्मणि + घञ्।) म्लेच्छभोजनः। गोधूमः। इति केचित् ॥
म्लेच्छास्यं, क्ली, (म्लेच्छे म्लेच्छदेशे आस्यमुत्पत्तिरस्य।) ताम्रम्। इति हारावली ॥
म्लिष्टं, क्ली, (म्लेच्छ देश्योक्तौ + क्तः।) म्लेच्छभाषा। अपशब्दः। तत्पर्य्यायः। परभाषा २। इति हारावली ॥
म्लेट, ऋ उन्मादे। इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट्।) ऋ, अमिम्लेटत्। म्लेटति लोकः उन्माद्यतीत्यर्थः। इति दुर्गादासः ॥
म्लेड, ऋ उन्मादे। इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट्।) ऋ, अमिम्लेडत्। म्लेडति। उन्माद्यतीत्यर्थः। इति दुर्गादासः ॥
म्लेव, ऋ ङ सेवने। इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट्।) ऋ, अमिम्लेवत्। ङ, म्लेवते। इति दुर्गादासः ॥
म्लै, कान्तिसंक्षये। इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-अक०-सेट्।) म्लायति चन्द्रो दिवसे। इति दुर्गादासः ॥